# श्रीरामरहस्योक्तं श्रीहनुमदष्टोत्तरशतनामस्तोत्रम्

। श्रीसीतारामौ विजयेते ।

हनुमानञ्जनासूनुर्धीमान् केसरिनन्दनः ।
वातात्मजो वरगुणो वानरेन्द्रो विरोचनः ॥ १॥

सुग्रीवसचिवः श्रीमान् सूर्यशिष्यस्सुखप्रदः ।
ब्रह्मदत्तवरो ब्रह्मभूतो ब्रह्मर्षिसन्नुतः ॥ २॥

जितेन्द्रियो जितारातीी रामदूतो रणोत्कटः ।
सञ्जीविनीसमाहर्ता सर्वसैन्यप्रहर्षकः ॥ ३॥

रावणाकम्प्यसौमित्रिनयनस्फुटभक्तिमान् ।
अशोकवनिकाच्छेदी सीतावात्सल्यभाजनम् ॥ ४॥

विषीदद्भूमितनयार्पितरामाङ्गुलीयकः ।
चूडामणिसमानेता रामदुःखापहारकः ॥ ५॥

अक्षहन्ता विक्षतारिस्तृणीकृतदशाननः ।
कुल्याकल्पमहाम्भोधिस्सिंहिकाप्राणनाशनः ॥ ६॥

सुरसाविजयोपायवेत्ता सुरनरार्चितः ।
जाम्बवन्नुतमाहात्म्यो जीविताहतलक्ष्मणः ॥ ७॥

जम्बुमालिरिपुर्जम्भवैरिसाध्वसनाशनः ।
अस्त्रावध्यो राक्षसारिस्सेनापतिविनाशनः ॥ ८॥

लङ्कापुरप्रदग्धा च वालानलसुशीतलः ।
वानरप्राणसन्दाता वालिसूनुप्रियङ्करः ॥ ९॥

महारूपधरो मान्यो भीमो भीमपराक्रमः ।
भीमदर्पहरो भक्तवत्सलो भर्त्सिताशरः ॥ १०॥

रघुवंशप्रियकरो रणधीरोरयाकरः ।
भरतार्पितसन्देशो भगवच्छिलष्टविप्रग्रहः ॥ ११॥

अर्जुनध्वजवासी च तर्जिताशरनायकः ।
महान् महामधुरवाङ्महात्मा मातरिश्वजः ॥ १२॥

मरुन्नुतो महोदारगुणो मधुवनप्रियः ।
महाधैर्यो महवीर्यो मिहिराधिककान्तिमान् ॥ १३॥

अन्नदो वसुदो वाग्मी ज्ञानदो वत्सलो वशी ।
वशीकृताखिलजगद्वरदो वानराकृतिः ॥ १४॥

भिक्षुरूपप्रतिच्छन्नोऽभीतिदो भीतिवर्जितः ।
भूमीधरहरोभूतिदायको भूतसन्नुतः ॥ १५॥

भुक्तिमुक्तिप्रदो भूमा भुजनिर्जितराक्षसः ।
वाल्मीकिस्तुतमाहात्म्यो विभीषणसुहृद्विभुः ॥ १६॥

अनुकम्पानिधिः पम्पातीरचारी प्रतापवान् ।
बह्मास्त्रहतरामादिजीवनो ब्रह्मवत्सलः ॥ १७॥

जयवार्ताहरो जेता जानकीशोकनाशनः ।
जानकीरामसाहित्यकारी जनसुखप्रदः ॥ १८॥

बहुयोजनगन्ता च बलवीर्यगुणाधिकः ।

रावणालयमर्दी च रामपादाब्जवाहकः ॥ १९॥

रामनामलसद्वक्तो रामायणकथादृतः ।
रामस्वरूपविलसन्मानसो रामवल्लभः ॥ २०॥

इत्थमष्टोत्तरशतं नाम्नां वातात्मजस्य यः ।
अनुसन्ध्यं पठेत्तस्य मारुतिस्संप्रसीदति ॥ २१॥

प्रसन्ने मारुतौ रामो भुक्तिमुक्ती प्रयच्छति ।

इति श्रीरामरहस्योक्तं श्रीहनुमदष्टोत्तरशतनामस्तोत्रं समाप्तम् ।